# श्रीदत्तात्रेयवज्रकवचम्

{॥ श्रीदत्तात्रेयवज्रकवचम् ॥}

श्रीगणेशाय नमः ।

श्रीदत्तात्रेयाय नमः ।

ऋषय ऊचुः ।

कथं सङ्कल्पसिद्धिः स्याद्वेदव्यास कलौ युगे ।

धर्मार्थकाममोक्षाणां साधनं किमुदाहृतम् ॥ १॥

व्यास उवाच ।

श‍ृण्वन्तुऋषयः सर्वे शीघ्रं सङ्कल्पसाधनम् ।

सकृदुच्चारमात्रेण भोगमोक्षप्रदायकम् ॥२॥

गौरीश‍ृङ्गे हिमवतः कल्पवृक्षोपशोभितम् ।

दीप्ते दिव्यमहारत्नहेममण्डपमध्यगम् ॥ ३॥

रत्नसिंहासनासिनं प्रसन्नं परमेश्वरम् ।

मन्दस्मितमुखाम्भोजं शङ्करं प्राह पार्वती ॥ ४॥

श्रीदेव्युवाच ।

देवदेव महादेव लोकशङ्कर शङ्कर ।

मन्त्रजालानि सर्वाणि यन्त्रजालानि कृत्स्नशः ॥ ५॥

तन्त्रजालान्यनेकानि मया त्वत्तः श्रुतानि वै ।
इदानीं द्रष्टुमिच्छामि विशेषेण महीतलम् ॥ ६॥

इत्युदीरितमाकर्ण्य पार्वत्या परमेश्वरः ।
करेणामृज्य सन्तोषात्पार्वतीं प्रत्यभाषत ॥ ७॥

मयेदानीं त्वया सार्धं वृषमारुह्य गम्यते ।
इत्युक्त्वा वृषमारुह्य पार्वत्या सह शङ्करः ॥ ८॥

ययौ भूमण्डलं द्रष्टुं गौर्याश्चित्राणि दर्शयन् ।
क्वचित् विन्ध्याचलप्रान्ते महारण्ये सुदुर्गमे ॥ ९॥

तत्र व्याहर्तुमायान्तं भिल्लं परशुधारिणम् ।
वर्ध्यमानं महाव्याघ्रं नखदण्ष्ट्राभिरावृतम् ॥ १०॥

अतीव चित्रचारित्र्यं वज्रकायसमायुतम् ।
अप्रयत्नमनायासमखिलं सुखमास्थितम् ॥ ११॥

पलायन्तं मृगं पश्चाद्व्याघ्रो भीत्या पलायितः ।
एतदाश्चर्यमालोक्य पार्वती प्राह शङ्करम् ॥ १२॥

श्रीपार्वत्युवाच ।

किमाश्चर्यं किमाश्चर्यमग्रे शम्भो निरीक्ष्यताम् ।
इत्युक्तः स ततः शम्भुर्दृष्ट्वा प्राह पुराणवित् ॥ १३॥

श्रीशङ्कर उवाच ।
गौरि वक्ष्यामि ते चित्रमवाङ्मानसगोचरम् ।
अदृष्टपूर्वमस्माभिर्नास्ति किञ्चन्न कुत्रचित् ॥ १४॥

मया सम्यक् समासेन वक्ष्यते शृणु पार्वति ।
अयं दूरश्रवा नाम भिल्लः परमधार्मिकः ॥ १५॥

समित्कुशप्रसूनानि कन्दमूलफलादिकम् ।
प्रत्यहं विपिनं गत्वा समादाय प्रयासतः ॥ १६॥

प्रिये पूर्वं मुनीन्द्रेभ्यः प्रयच्छति न वाञ्छति ।
तेऽपि तस्मिन्नपि दयां कुर्वते सर्वमौनिनः ॥ १७॥

दलादनो महायोगी वसन्नेव निजाश्रमे ।
कदाचिदस्मरत् सिद्धं दत्तात्रेयं दिगम्बरम् ॥ १८॥

दत्तात्रेयः स्मर्तृगामी चेतिहासं परीक्षितुम् ।
तत्क्षणात्सोऽपि योगीन्द्रो दत्तात्रेयः समुत्थितः ॥ १९॥

तं दृष्ट्वाऽऽश्चर्यतोषाभ्यां दलादनमहामुनिः।

सम्पूज्याग्रे निषीदन्तं दत्तात्रेयमुवाच तम् ॥ २०॥

मयोपहूतः सम्प्राप्तो दत्तात्रेय महामुने।

स्मर्तृगामी त्वमित्येतत् किंवदन्ती परीक्षितुम् ॥ २१॥

मयाद्य संस्मृतोऽसि त्वमपराधं क्षमस्व मे।

दत्तात्रेयो मुनिं प्राह मम प्रकृतिरीदृशी ॥ २२॥

अभक्त्या वा सुभक्त्या वा यः स्मरेन्मामनन्यधीः।

तदानीं तमुपागत्य ददामि तदभीप्सितम् ॥ २३॥

दत्तात्रेयो मुनिं प्राह दलादनमुनीश्वरम्।

यदिष्टं तद्वृणीष्व त्वं यत् प्राप्तोऽहं त्वया स्मृतः ॥ २४॥

दत्तात्रेयं मुनिः प्राह मया किमपि नोच्यते।

त्वच्चित्ते यत्स्थितं तन्मे प्रयच्छ मुनिपुङ्गव ॥ २५॥

श्रीदत्तात्रेय उवाच।

ममास्ति वज्रकवचं गृहाणेत्यवदन्मुनिम्।

तथ्येत्यङ्गीकृतवते दलादनमुनये मुनिः ॥ २६॥

स्ववज्रकवचं प्राह ऋषिच्छन्दःपुरःसरम् ।

न्यासं ध्यानं फलं तत्र प्रयोजनमशेषतः ॥ २७॥

अस्य श्रीदत्तात्रेयवज्रकवचस्तोत्रमन्त्रस्य,

किरातरूपी महारुद्र ऋषिः, अनुष्टुप् छन्दः,

श्रीदत्तात्रेयो देवता, द्रां बीजं, आं शक्तिः,

क्रौं कीलकं, ॐ आत्मने नमः । ॐ द्रीं मनसे नमः ।

ॐ आं द्रीं श्रीं सौः ॐ क्लां क्लीं क्लूं क्लैं क्लौं क्लः ।

श्रीदत्तात्रेयप्रसादसिद्ध्यर्थे जपे विनियोगः ।

ॐ द्रां अङ्गुष्ठाभ्यां नमः ।

ॐ द्रीं तर्जनीभ्यां नमः ।

ॐ द्रूं मध्यमाभ्यां नमः ।

ॐ द्रैं अनामिकाभ्यां नमः ।

ॐ द्रौं कनिष्ठिकाभ्यां नमः ।

ॐ द्रः करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादि न्यासः ।

ॐ भूर्भुवःस्वरोमिति दिग्बन्धः ।

अथ ध्यानम् ।

जगदङ्कुरकन्दाय सच्चिदानन्दमूर्तये ।

दत्तात्रेयाय योगीन्द्रचन्द्राय परमात्मने ॥

कदा योगी कदा भोगी कदा नग्नः पिशाचवत् ।

दत्तात्रेयो हरिः साक्षाद्भुक्तिमुक्तिप्रदायकः ॥

वाराणसीपुरस्नायी कोल्हापुरजपादरः ।
माहुरीपुरभिक्षाशी सह्यशायी दिगम्बर ॥

इन्द्रनीलसमाकारश्चन्द्रकान्तिसमद्युतिः ।
वैडुर्यसदृशस्फूर्तिश्चलत्किञ्चिज्जटाधरः ॥

स्निग्धधावल्ययुक्ताक्षोऽत्यन्तनीलकनीनिकः ।
भ्रूवक्षःश्मश्रुनीलाङ्कः सशाङ्कसदृशाननः ॥

हासनिर्जितनीहारः कण्ठनिर्जितकम्बुकः ।
मांसलांसो दीर्घबाहुः पाणिनिर्जितपल्लवः ॥

विशालपीनवक्षाश्च ताम्रपाणिर्दलोदरः ।
पृथुलश्रोणिललितो विशालजघनस्थलः ॥

रम्भास्तम्भोपमानोरुर्जानुपूर्वैकजङ्घकः ।
गूढगुल्फः कूर्मपृष्ठोलसत्पादोषरिस्थलः ॥

रक्तारविन्दसदृशरमणीयपदाधरः ।
चर्माम्बरधरो योगी स्मर्तृगामी क्षणे क्षणे ॥

ज्ञानोपदेशनीरतो विपद्धरणदीक्षितः ।

सिद्धासनसमासीन ऋजुकायो हसन्मुखः ॥

वामहस्तेन वरदो दक्षिणेनाभयङ्करः ।

बालोन्मत्तपिशाचीभिः क्वचिद्युक्तः परीक्षितः ॥

त्यागी भोगी महायोगी नित्यानन्दो निरञ्जनः ।

सर्वरूपी सर्वदाता सर्वगः सर्वकामदः ॥

भस्मोद्धूलितसर्वाङ्गो महापातकनाशनः ।

भुक्तिप्रदो मुक्तिदाता जीवन्मुक्तो न संशयः ॥

एवं ध्यात्वाऽनन्यचित्तो मद्वज्रकवचं पठेत् ।

मामेव पश्यन्सर्वत्र स मया सह सङ्चरेत् ॥

दिगम्बरं भस्मसुगन्धलेपनं चक्रं त्रिशूलं डमरुं गदायुधम् ।

पद्मासनं योगिमुनीन्द्रवन्दितं दत्तेति नामस्मरणेन नित्यम् ॥

ॐ दत्तात्रेयः शिरः पातु सहस्राब्जेषु संस्थितः ।

भालं पात्वानसूयेयश्चन्द्रमण्डलमध्यगः ॥ २८॥

कूर्चं मनोमयः पातु हं क्षं द्विदलपद्मभूः ।

ज्योतिरूपोऽक्षिणी पातु पातु शब्दात्मकः श्रुती ॥ २९॥

नासिकां पातु गन्धात्मा मुखं पातु रसात्मकः ।
जिह्वां वेदात्मकः पातु दन्तोष्ठौ पातु धार्मिकः ॥ ३०॥

कपोलावत्रिभूः पातु पात्वशेषं ममात्ववित् ।
स्वरात्मा षोडशाराब्जस्थितः स्वात्माऽवताद्गलम् ॥ ३१॥

स्कन्धौ चन्द्रानुजः पातु भुजौ पातु कृतादिभूः ।
जत्रुणी शत्रुजित् पातु पातु वक्षःस्थलं हरिः ॥ ३२॥

कादिठान्तद्वादशारपद्मगो मरुदात्मकः ।
योगीश्वरेश्वरः पातु हृदयं हृदयस्थितः ॥ ३३॥

पार्श्वे हरिः पार्श्ववर्ती पातु पार्श्वस्थितः स्मृतः ।
हठयोगादियोगज्ञः कुक्षी पातु कृपानिधिः ॥ ३४॥

डकारादिफकारान्तदशारसरसीरुहे ।
नाभिस्थले वर्तमानो नाभिं वह्न्यात्मकोऽवतु ॥ ३५॥

वह्नितत्वमयो योगी रक्षतान्मणिपूरकम् ।
कटिं कटिस्थब्रह्माण्डवासुदेवात्मकोऽवतु ॥ ३६॥

वकारादिलकारान्तषट्पत्राम्बुजबोधकः ।
जलतत्वमयो योगी स्वाधिष्ठानं ममावतु ॥ ३७॥

सिद्धासनसमासीन ऊरू सिद्धेश्वरोऽवतु ।
वादिसान्तचतुष्पत्रसरोरुहनिबोधकः ॥ ३८॥

मूलाधारं महीरूपो रक्षताद्वीर्यनिग्रही ।
पृष्ठं च सर्वतः पातु जान्युन्यस्तकराम्बुजः ॥ ३९॥

जङ्घे पात्ववधूतेन्द्रः पात्वङ्घ्री तीर्थपावनः ।
सर्वाङ्गं पातु सर्वात्मा रोमाण्यवतु केशवः ॥ ४०॥

चर्म चर्माम्बरः पातु रक्तं भक्तिप्रियोऽवतु ।
मांसं मांसकरः पातु मज्जां मज्जात्मकोऽवतु ॥ ४१॥

अस्थीनि स्थिरधीः पायान्मेधां वेधाः प्रपालयेत् ।
शुक्रं सुखकरः पातु चित्तं पातु दृढाकृतिः ॥ ४२॥

मनोबुद्धिमहङ्कारं हृषीकेशात्मकोऽवतु ।
कर्मेन्द्रियाणि पात्वीशः पातु ज्ञानेन्द्रियाण्यजः ॥ ४३॥

बन्धून् बन्धूत्तमः पायाच्छत्रुभ्यः पातु शत्रुजित् ।

गृहारामधनक्षेत्रपुत्रादीञ्छङ्करोऽवतु ॥ ४४॥

भार्यां प्रकृतिवित् पातु पश्वादीन्पातु शाङ्‍र्गभृत् ।
प्राणान्पातु प्रधानज्ञो भक्ष्यादीन्पातु भास्करः ॥ ४५॥

सुखं चन्द्रात्मकः पातु दुःखात् पातु पुरान्तकः ।
पशून्पशूपतिः पातु भूतिं भूतेश्वरो मम ॥ ४६॥

प्राच्यां विषहरः पातु पात्वाग्नेय्यां मखात्मकः ।
याम्यां धर्मात्मकः पातु नैरृत्यां सर्ववैरिहृत् ॥ ४७॥

वराहः पातु वारुण्यां वायव्यां प्राणदोऽवतु ।
कौबेर्यां धनदः पातु पात्वैशान्यां महागुरुः ॥ ४८॥

उर्ध्वं पातु महासिद्धः पात्वधस्ताज्जटाधरः ।
रक्षाहीनं तु यत्स्थानं रक्षत्वादिमुनीश्वरः ॥ ४९॥

एतन्मे वज्रकवचं यः पठेच्छृणुयादपि ।
वज्रकायश्चिरञ्जीवी दत्तात्रेयोऽहमब्रुवम् ॥ ५०॥

त्यागी भोगी महायोगी सुखदुःखविवर्जितः ।
सर्वत्रसिद्धसङ्कल्पो जीवन्मुक्तोऽद्य वर्तते ॥ ५२॥

इत्युक्त्वान्तर्दधे योगी दत्तात्रेयो दिगम्बरः ।
दलादनोऽपि तज्जप्त्वा जीवन्मुक्तः स वर्तते ॥ ५३॥

भिल्लो दूरश्रवा नाम तदानीं श्रुतवादिनम् ।
सकृच्छ्रवणमात्रेण वज्राङ्गोऽभवदप्यसौ ॥ ५४॥

इत्येतद्वज्रकवचं दत्तात्रेयस्य योगिनः ।
श्रुत्वाशेषं शम्भुमुखात् पुनरप्याह पार्वती ॥ ५५॥

पार्वत्युवाच ।
एतत्कवचमाहात्म्यं वद विस्तरतो मम ।
कुत्र केन कदा जाप्यं किं यजाप्यं कथं कथम् ॥ ५६॥

उवाच शम्भुस्तत्सर्वं पार्वत्या विनयोदितम् ।
श्रीशिव उवाच ।
श्रुणु पार्वति वक्ष्यामि समाहितमनाविलम् ॥ ५७॥

धर्मार्थकाममोक्षाणामिदमेव परायणम् ।
हस्त्यश्वरथपादातिसर्वैश्वर्यप्रदायकम् ॥ ५८॥

पुत्रमित्रकलत्रादिसर्वसन्तोषसाधनम् ।
वेदशास्त्रादिविद्यानां निधानं परमं हि तत् ॥ ५९॥

सङ्गीतशास्त्रसाहित्यसत्कवित्वविधायकम् ।
बुद्धिविद्यास्मृतिप्रज्ञामतिप्रौढिप्रदायकम् ॥ ६०॥

सर्वसन्तोषकरणं सर्वदुःखनिवारणम् ।
शत्रु संहारकं शीघ्रं यशःकीर्तिविवर्धनम् ॥ ६१॥

अष्टसंख्या महारोगाः सन्निपातास्त्रयोदश ।
षण्णवत्यक्षिरोगाश्च विंशतिर्मेहरोगकाः ॥ ६२॥

अष्टादश तु कुष्ठानि गुल्मान्यष्टविधान्यपि ।
अशीतिर्वातरोगाश्च चत्वारिंशत्तु पैत्तिकाः ॥ ६३॥

विंशतिश्लेष्मरोगाश्च क्षयचातुर्थिकादयः ।
मन्त्रयन्त्रकुयोगाद्याः कल्पतन्त्रादिनिर्मिताः ॥ ६४॥

ब्रह्मराक्षसवेतालकूष्माण्डादिग्रहोद्भवाः ।
सङ्गजाः देशकालस्थास्तापत्रयसमुत्थिताः ॥ ६५॥

नवग्रहसमुद्भूता महापातकसम्भवाः ।
सर्वे रोगाः प्रणश्यन्ति सहस्रावर्तनाद्ध्रुवम् ॥ ६६॥

अयुतावृत्तिमात्रेण वन्ध्या पुत्रवती भवेत् ।

अयुतद्वितयावृत्त्या ह्यपमृत्युजयो भवेत् ॥ ६७॥

अयुतत्रितयाच्चैव खेचरत्वं प्रजायते ।
सहस्रादयुतादर्वाक् सर्वकार्याणि साधयेत् ॥ ६८॥

लक्षावृत्या कार्यसिद्धिर्भवेत्येव न संशयः ।
विषवृक्षस्य मूलेषु तिष्ठन् वै दक्षिणामुखः ॥ ६९॥

कुरुते मासमात्रेण वैरिणं विकलेन्द्रियम् ।
औदुम्बरतरोर्मूले वृद्धिकामेन जाप्यते ॥ ७०॥

श्रीवक्षमूले श्रीकामी तिन्तिणी शान्तिकर्मणि ।
ओजस्कामोऽश्वत्थमूले स्त्रीकामैः सहकारके ॥ ७१॥

ज्ञानार्थी तुलसीमूले गर्भगेहे सुतार्थिभिः ।
धनार्थिभिस्तु सुक्षेत्रे पशुकामैस्तु गोष्ठके ॥ ७२॥

देवालये सर्वकामैस्तत्काले सर्वदर्शितम् ।
नाभिमात्रजले स्थित्वा भानुमालोक्य यो जपेत् ॥ ७३॥

युद्धे वा शास्त्रवादे वा सहस्रेण जयो भवेत् ।
कण्ठमात्रे जले स्थित्वा यो रात्रौ कवचं पठेत् ॥ ७४॥

ज्वरापस्मारकुष्ठादितापज्वरनिवारणम् ।

यत्र यत्स्यात्स्थिरं यद्यत्प्रसन्नं तन्निवर्तते ॥ ७५॥

तेन तत्र हि जप्तव्यं ततः सिद्धिर्भवेद्ध्रुवम् ।

इत्युक्त्वान् च शिवो गौर्ये रहस्यं परमं शुभं ॥ ७६॥

यः पठेत् वज्रकवचं दत्तात्रेयोसमो भवेत् ।

एवं शिवेन कथितं हिमवत्सुतायै प्रोक्तं ॥ ७७॥

दलादमुनयेऽत्रिसुतेनपूर्वम् यः कोऽपि वज्रकवचं ।

पठतीह लोके दत्तोपमश्चरति योगिवरश्चिरायुः ॥ ७८॥

॥ इति श्रीरुद्रयामले हिमवत्खण्डे उमामहेश्वरसंवादे

श्रीदत्तात्रेयवज्रकवचस्तोत्रं सम्पूर्णम् ॥

Encoded and proofread by Ravin Bhalekar ravibhalekar@hotmail.com

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org

